६१. सन्तोषो वै स्वर्गतम सन्तोषः परमं सुखम् ।
तुष्टेर् न किञ्चित् परतः सा सम्यक् प्रतितिष्ठति ॥

६२. आत्मानम् असमाधाय समाधित्सति यः परान् ।
विषयेष्व् इन्द्रियवशं मानवाः प्रहसन्ति तम् ॥

६३. स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्याचरति मित्रार्थे यश्च मूढ स उच्यते ॥

६४. सर्वात्मनैव धर्मस्य न परस्य न चात्मनः ।
सर्वोपायैर् उज्जिहीर्षेद् आत्मानमिति मे.मतिः ॥

६५. श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३-३५

६६. श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असम्भिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ।

६७. सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगमुक्तात्मा सर्वत्र समदर्शनः ॥ ६-२९

६८. एक एव चरेद् धर्मं नास्ति धर्मे सहायता ।
एकश् चरति यः पश्यन् न जहाति न हीयते ॥

६९. यद् हिंसादिकृतं कर्म इह चैव परत्र च ।
श्रद्धां निहन्ति वै पार्थ सा हता हन्ति तं नरम् ॥

७०. आत्मन्येवात्मनात्मानं यथा त्वम् अनुपश्यसि ।
एवमेवात्मनात्मानम् अन्यस्मिन् किं न पश्यसि ॥

७१. यावान् आत्मनि वेदात्मा तावान् आत्मा परात्मनि ।
य एवं सततं वेद सो अमृतत्वाय कल्पते ॥

७२. योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ५-७

७३. अहं त्वयि ममत्वं च मयि तेषु तथाप्यहम् ।
पूर्वसम्बन्धिसंयोगं नैतद् दान्तो निषेवते ॥

७४. आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥
६-३२

७५. विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥ ५-१८

७६. इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ॥
५-१९

७७. सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ६-९

७८. प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणम् अधिगच्छति ॥

७९. यद् यद् इच्छन्ति तत् सर्वं भजन्ति विभजन्ति च ।
इत्येतत् सात्त्विकं वृत्तं कथितं वो द्विजोत्तम ॥

८०. सर्वेषां यः सुहृत् नित्यं सर्वेषां च हिते रतः ।
कर्मणा मनसा वाचा स धर्मं वेद भारत ॥

८१. पश्यैतम् लक्षणोद्देशं धर्माधर्मे परन्तप ।
लोकसंग्रहसंयुक्तं विधात्रा विहितं पुरा ॥

८२. सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
मधु नक्तम् उतोषसो मधुमत् पार्थिवं रजः ॥

८३. मधु नो द्यावापृथिवी मिमिक्षताम्
मधुश्चुता मधुदुघे मधुव्रते ।
दधाने यज्ञं द्रविणं च देवता
महि श्रवो वाजम् अस्मे सुवीर्यम् ॥
ऋक्.–६–८०–५

८४. लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ ५-२५

८५. न हि सर्वहितः कश्चिद् आचारः संप्रवर्तते ।
तेनैवान्यः प्रभवति सो अपरं बाधते पुनः ॥

८६. येनैवान्यः स भवति सो अपरान् अपि बाधते ।
आचाराणाम् अनैकाग्र्यं सर्वेषाम् उपलक्षयेत् ॥

८७. विरोधिषु महानघ निश्चित्य गुरुलाघवम ।
न बाधा विद्यते यत्र तं धर्मं समुपाचरेत् ॥

८८. धर्मं यो बाधते धर्मः न स धर्म कुधर्म तत् ।
अविरोधात् तु यो धर्मः स धर्मः सत्यविक्रम ॥

८९. गुरुलाघवम् आदाय धर्माधर्मविनिश्चये ।
यतो भूयान् ततो राजन कुरुष्व धर्मनिश्चयम् ॥

९०. नैकम् इच्छेद् गणं हित्वा स्याच् चेद् अन्यतरग्रहः ।
यस् त्वेकः बहुभिः श्रेयान् कामं तेन गणं त्यजेत् ॥

९१. त्यजेद् एकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे धर्मार्थे पृथिवीं त्यजेत् ॥

९२. सर्वज्ञः सर्वभावज्ञः सर्वशत्रुभयङ्करः ।
इति स्म भाषते काव्यः जम्भत्यागे महासुरान् ॥

९३. एकं हत्वा यदि कुले शिष्टानां स्याद् अनामयम् ।
कुलं हत्वा यदि राष्ट्रे न तद् वृत्तोपघातकम ।

९४. विनश्यमानं धर्मं हि यो अभिरक्षेत् स धर्मवित् ।
न तेन धर्महा स स्यात् मन्युस् तम् मन्युम् ऋच्छति॥

९५. स्वकर्मणा हतं हन्ति हत एव स हन्यते ।
तथा गतं च यो हन्यात् न स पापेन युज्यते ॥

९६. अहिंसा सकलो धर्मः हिंसा धर्मस् तथा हितः ।
सत्यं ते अहं प्रवक्ष्यामि नो धर्मः सत्यवादिनाम् ॥

९७. पितॄन् पितामहान् भ्रातॄन् गुरून् संबन्धिबान्धवान् ।
मिथ्याप्रवृत्तान् यत् संख्ये निहन्याद् धर्म एव स ॥

९८. मनः करोति पुण्यानि मनो लिप्यते पातकैः ।
मनश्च तन्मना भूत्वा न पुण्यैः न च पातकैः ॥

९९. एकोदरकृते व्याघ्रः करोति विघसं बहु ।
तम् अन्ये अभ्युपजीवन्ति मन्दलोभवशाः मृगाः ॥

१००. यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥
१८-१७

१०१. ईश्वरो वा भवेत् कर्ता पुरुषो वापि भारत ।
हठो वा वर्तते लोके कर्मजं वा फलं स्मृतम् ॥

१०२. ईश्वरेण नियुक्तो हि साध्वसाधु च भारत ।
कुरुते पुरुषः कर्म फलम् ईश्वरगामि तत् ॥

१०३. अथापि पुरुषः कर्ता कर्मणः शुभपापयोः ।
न परो विद्यते तस्माद् एवम् एतत् शुभं कृतम् ॥

१०४. न तद् अस्ति न यत् सत्यम् न तदस्ति न यन मृषा ।
यद् यथा येन निर्णीतं तत् तथा तेन लक्ष्यते ॥

१०५. लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः ।
अहिंसा साधुहिंसेति श्रेयान् धर्मपरिग्रहः ॥

१०६. ममानां श्रद्दधानानां संयतानां सुचेतसाम् ।
कुर्वताम् यज्ञ इत्येव न यज्ञो जातु नेष्यते ॥

१०७. न हिनस्ति नारभते नाभिद्रुह्यति किञ्चन ।
यज्ञो यष्टव्य इत्येव यो यजत्य अफलेप्सया ॥

१०८. त्यागवांश्च पुनः पापं नालं कर्तुमिति श्रुतिः ।
प्राप्तवत्मा कृतमतिर् ब्रह्म सम्पद्यते तदा ॥

१०९. बीजानि ह्यग्निदग्धानि न रोहन्ति पुनर् यथा ।
ज्ञानदग्धैस् तथा क्लेशैर् नात्मा संयुज्यते पुनः ॥

११०. क्षीराद् उद्धृतम् आज्यं यत् क्षिप्तं पयसि तत् पुनः ।
न तेनैवैकतां यान्ति संसारे ज्ञानवांस् तथा ॥

१११. एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥४-१५

# सप्तमी

## गुण-मन्यु

अर्जुन उवाच ।

१. योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥

६-३३

२. अद्वैधज्ञः पथि द्वैधे संशयं प्राप्तुम् अर्हति ।
बुद्धिद्वैधं वेदितव्यं पुरस्तादेव भारत ॥

३. धर्मो ह्यणीयान् वचनाद् बुद्धिश्च भरतर्षभ ।
श्रुत्वोपास्य सदाचारैः साधुर्भवति स क्वचित् ॥

४. न विधिर् ग्रसते प्रज्ञां प्रज्ञा तु ग्रसते विधिम् ।
विधिपर्यागतान् अर्थान् प्राज्ञो न प्रतिपद्यते ॥

५. अमर्षाच्च शास्त्रसंमोहाद् अविज्ञानाच्च भारत ।
शास्त्रं प्रज्ञस्य वदतः समूहे यात्यदर्शनम् ॥

६. सूक्ष्मा गतिर् हि धर्मस्य बहुशाखा ह्यनन्तिका ।
अनृतेन भवेत् सत्यं सत्येनैवानृतं भवेत् ॥

७. स एव धर्मः सो अधर्मः तं तं प्रति नरं भवेत् ।
पात्रकर्मविशेषेण देशकालाव् अवेक्ष्य च ॥
८. सूक्ष्मत्वात् न स विज्ञातुं शक्यते बहुनिह्नवः ।
उपलभ्यान्तरा चान्यान् आचारान् अवबुध्यते ।
९. कस्माच्चिद् दानयोगाद् हि सत्यमेव विशिष्यते ।
सत्यवाक्याच्च राजेन्द्र किञ्चिद् दानं विशिष्यते ॥
१०. एवमेव महेष्वास प्रियवाक्यान् महीपते ।
अहिंसा दृश्यते गुर्वी ततश्च प्रियमिष्यते ॥
११. अधर्मो यत्र धर्माख्यः धर्मश् चाधर्मसंज्ञितः ।
स विज्ञेयो विभागेन यत्र मुह्यन्त्य् अबुद्धयः ॥
१२. सत्यस्य वचनं साधु न सत्याद् विद्यते परम् ।
तत्त्वेनैव सुदुर्ज्ञेयम् पश्य सत्यम् अनुष्ठितम् ॥
१३. वाच्यर्थाः नियताः सर्वे वाङ्मया वाग्-विनिसृताः।
तां तु यः स्तेनयेद् वाचम् स सर्वस्तेयकृन् नरः॥
१४. भवेत् सत्यम् अवक्तव्यम् वक्तव्यम् अनृतं भवेत् ।
यत्रानृतं भवेत् सत्यं सत्यञ्चाप्यनृतं भवेत् ॥
१५. ये न्यायेन जिहीर्षन्तो धर्मम् इच्छन्ति कर्हिचित् ।
श्रेयस् तत्रानृतं वक्तुं तत् सत्यम् अविचारितम् ॥

१६. अधर्मं नात्र पश्यन्ति धर्मतत्त्वार्थदर्शिनः ।
यत् स्तेनैः सह सम्बन्धात् मुच्यते शपथैरपि ॥

१७. सत्यसंप्रतिपत्त्यर्थं यद् ब्रूयुः साक्षिणः क्वचित् ।
अनुक्ता तत्र तद् वाच्यम् ते सर्वे अनृतवादिनः॥

१८. तद् वदन् धर्मतो अर्थेषु जानन् अप्यन्यथा नरः।
न स्वर्गात् च्यवते लोकाद् दैवीं वाच्यम् वदन्ति ताम्॥

१९. दृश्यन्ते धर्मरूपेण अधर्मं प्राकृतश् चरन् ।
धर्मं चाधर्मरूपेण कश्चिद् अप्राकृतश्चरन् ॥

२०. तादृशो बध्यते बालो यत्र सत्यम् अनिश्चितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥

२१. सत्यस्य वचनं साधु सत्यज्ञानं तु दुष्करम् ।
यद् भूतहितम् अत्यन्तम् एतत् सत्यम् ब्रवीम्यहम्॥

२२. अनर्हते यद् ददाति न ददाति यद् अर्हते ।
अर्हानर्हापरिज्ञानाद् दानधर्मो अपि दुष्करः ॥

२३. पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् ।
च तेभ्यः धनं देयं शक्ये सति कथञ्चन ॥

२४. मैत्राः क्रूराणि कुर्वन्तो जयन्ति स्वर्गम् उत्तमम् ।
हिंस्रा मृदूनि कुर्वन्तः प्राप्नुवन्त्य् अधमां गतिम् ॥

२५. अथ चेद् अवधो धर्मो अधर्मः को जातुचिद् भवेत् ।
दस्यवश्च न हिंसेरन् कौन्तेय सङ्करो भवेत् ॥

२६. अहिंसा सकलो धर्मः हिंसाधर्मस् तथा हितः ।
सत्यं ते अहं प्रवक्ष्यामि यो धर्मः सत्यवादिनाम् ॥

२७. अथर्वाङ्गिरसी ह्येषा श्रुतीनाम् उत्तमा श्रुतिः ।
अविचार्यैव कार्यैषा श्रेयस्कामैः नरैः सदा ॥

२८. कारणाद् धर्मम् अन्विच्छेत् न लोकचरितं चरेत् ।
केवलाच्चरितत्वात् तु निपुणो नावबुध्यसे ॥

२९. न हि वैक्लव्यसंसृष्टम् आनृशंस्यम् इहाश्रितः ।
प्रजापालनसम्भूतां आप्ता धर्मफलं ह्यसि ॥

३०. आकुलानि च शास्त्राणि हेतुभिश् चिन्तितानि च ।
निश्चयश्चैव यो मन्त्रे वेदाहं तं यथाविधिः ॥

३१. त्वं तु केवलमन्त्रज्ञो वीरव्रतसमन्वितः ।
शास्त्रार्थं तत्त्वतो गन्तुम् न समर्थः कथञ्चन ॥

३२. यः कश्चित् न्याय्य आचारः सर्वं शास्त्रमिति श्रुतिः ।
यद् अन्याय्यम् अशास्त्रं तद् इति मे विद्धि निश्चयः ॥

३३. पुमान् वेदश्च यज्ञश्च न्यायवृत्तो यदा भवेत् ।
अन्यायवृत्तः पुरुषः न परस्य न चात्मनः ॥

३४. यस्तु सर्वाणि भूतानि आत्मन्येवा अनुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥
यजु. ४०-६

३५. एको अपि वेदविद् धर्मं यः व्यवस्येत् द्विजोत्तमः ।
स विज्ञेयः परो धर्मः नाज्ञानाम् उदितो अयुतैः ॥

३६. नेत्रहीनो यथा ह्येकः कृच्छ्राणि लभते अध्वनि ।
ज्ञानहीनस् तथा लोके तस्माज् ज्ञानविदो अधिकाः ॥

३७. भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नरा श्रेष्ठाः नरेषु ब्राह्मणाः स्मृताः ॥

३८. ब्राह्मणेषु तु विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ॥

३९. एवं एतं नरश्रेष्ठ धर्मं त्यक्त्वा अल्पकं नरः।
बृहन्तं धर्मम् आप्नोति स बुद्ध इति निश्चितम् ॥
४०. त्वय्यैवैतत् महाप्राज्ञ युक्तं निपुणदर्शनम् ।
येन भावेन तान् अर्थान् सर्वान् विचरसे नृप ॥
४१. सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नति महाबाहो देहे देहिनमव्ययम् ॥ १४-५
४२. तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ १४-६
४३. रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ १४-७
४४. तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ १४-८
४५. न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥
१८-४०
४६. नैव त्यागी न सन्तुष्टो नाशोको न निरामयः ॥
नानिर्विवित्सो नावृत्तो नापवृत्तो अस्ति कश्चन ।

४७. अजामेकां लोहितशुक्लकृष्णाम्
बह्वीः प्रजाः सृजमानाः सरूपाः ।
अजो ह्येकः जुषमाणो अनुशेते
जहात्येनां भुक्तभोगाम् अजो अन्यः ॥

४८. या ते धामानि परमाणि या अवमा
या मध्यमा विश्वकर्मन् उतेमा ।
शिक्षा सखिभ्यः हविषि स्वधाव
स्वयं यजस्व तन्वं वृधानः ॥
ऋक्.–१०–८०–५

४९. सत्त्वं सुखे संजयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ १४-९

५०. रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १४-१०

५१. नियम्यते तमो यत्र रजस्तत्र प्रवर्तते ।
नियम्यते रजो यत्र सत्त्वं तत्र प्रवर्तते ॥

५२. सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥
१४ ११

५३. लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १४-१२

५४. अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १४-१३

५५. कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १४-१३

५६. सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १४-१७

५७. ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥
१४-१८

५८. द्वौ भूतसर्गौ लोकेऽस्मिन्दैव दानव एव च ।
दैवं विस्तरशः प्रोक्तं दानवं पार्थ मे शृणु ॥ १६-६

५९. अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥
१६-१

६०. अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ १६-२

६१. तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता।
भवन्ति संपदं दैवीमभिजातस्य भारत॥ १६-३

६२. दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य सम्पदं पार्थ दानवं॥ १६-४

६३. दैवी संपद्विमोक्षाय निबन्धे दानवी मता।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव॥
१६-५

६४. उदारमेव विद्वांसो धर्मं प्राहुर् मनीषिणः।
उदारं प्रतिपद्यस्व नावरे स्थातुम् अर्हसि॥

६५. प्रभवार्थाय भूतानाम् धर्म-प्रवचनम् कृतम्।
यः स्यात् प्रभवसंयुक्तः स धर्म इति निश्चयः॥

६६. अलब्धं चैव लिप्सेत लब्धं रक्षेत् प्रयत्नतः।
रक्षितं वर्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत्॥

६७. उत्सवाद् उत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखं।
श्रद् दधानाश्च दान्ताश्च धनाढ्या शुभकारिणः॥

६८. दुर्भिक्षाद् दुर्भिक्षं यान्ति क्लेशात् क्लेशं भयाद् भयम्।
मृतेभ्यः प्रमृतं यान्ति दरिद्राः पापकारिणः॥

६९. दुराचारः क्षीणबलः परित्राणं न गच्छति ।
अपध्वस्तो ह्यवमतो दुःखम् जीवति जीवितम् ॥

७०. अन्तं धीरा निषेवन्ते मध्यं ग्रामसुखप्रियाः ।
उत्तमांश्च परिक्लेशान् भोगांश्चातीवमानुषाः ॥

७१. सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः ।
सुसन्तोषः कापुरुषः स्वल्पकेनैव तुष्यति ॥

७२. सर्वैरपि गुणैर् युक्तो निर्वीर्यः किं करिष्यति ।
गुणीभूताः गुणाः सर्वे तिष्ठन्ति हि पराक्रमे ॥

७३. न श्रुतेन न दानेन न सान्त्वेन न चेज्यया ।
त्वयेयं पृथिवी लब्धा न संकोचेन चाप्युत ॥

७४. अलातं तिन्दुकस्येव मुहूर्तमपि हि ज्वल ।
मा तुषाग्निर् इवानर्चिर् धूमायस्व जिजीविषुः ॥

७५. युद्धाय क्षत्रियः सृष्टः विजयाय जयाय वा ।
जयन् वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम् ॥

७६. अन्धं तम इवेदं स्यात् न प्राज्ञायत किञ्चन ।
दण्डश्चेन् न भवेल् लोके विभजन् साध्वसाधुनी ॥

७७. राजदण्डभयाद् एके पापाः पापं न कुर्वते ।
सर्वः दण्डजितो लोकः दुर्लभो हि शुचिर् जनः ॥

७८. दण्डः शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर् बुधाः ॥

७९. यस्मिन् यथा वर्तते यो मनुष्यस्
तास्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया वर्तितव्यः
साध्वाचारो साधुना प्रत्युपेयः ॥

८०. गृध्रदृष्टिर् बकालीनः श्वचेष्टः सिंहविक्रमः ।
अनुद्विग्नः काकशङ्की भुजङ्गचरितं चरेत् ॥

८१. उपायान् प्रब्रवीम्येतान् न मे माया विवक्षिता ।
अनुपायेन दमयन् प्रकोपयति वाजिनः ॥

८२. वनस्पतेर् अपक्वानि फलान्य् उपचिनोति यः ।
न प्राप्नोति रसं तेभ्यः बीजञ्चास्य विनश्यति ॥

८३. न हि खल्वनुपायेन कश्चिद् अर्थो अभिसिध्यति ।
उधश् छिन्द्यात् तु यो धेन्वाः क्षीरार्थी न लभेत् पयः ॥

८४. यावद् रथपथस् तावत् रथेन स तु गच्छति ।
क्षीणे रथपथे विद्वान् रथमुत्सृज्य गच्छति ॥

८५. नावम् न शक्यम आरुह्य स्थले विपरिवर्तितुम् ।
तथैव रथमादाय नाप्सु चर्या विधीयते ॥

८६. दृश्यते तलवद् व्योम खद्योत हव्यवाड् इव ।
न चैवास्ति तलं व्योम्नि खद्योते न हुताशनः ॥

८७. तस्मात् प्रत्यक्षदृष्टो ऽपि युक्तो ह्यर्थ परीक्षितुम् ।
परीक्ष्य ज्ञापयन् अर्थान् न पश्चात् परितप्यते ॥

८८. यो अरिणा सह सन्धाय शयीत कृतकृत्यवत् ।
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ॥

८९. विश्वगलोपः प्रवर्तेत भिद्येरन् सर्वसेतवः ।
ममत्वं न प्रजानीयुर् यदि दण्डो न पालयेत् ॥

९०. यस्याभावेन भूतानाम् अभावः स्यात् समन्ततः ।
दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम् ॥

९१. यं त्विमं धर्मामित्याहुर् धनाद् एष प्रवर्तते ।
धर्मं संहरते तस्य धनं हरति यस्य सः ॥

९२. यत्र नैवाद्य न प्रातर् भोजनं परिदृश्यते ।
दारिद्यम् इति यत् प्रोक्तं पर्यायमरणं हि तत् ॥

९३. कर्षणार्थो हि यो धर्मो मित्राणाम् आत्मनस् तथा ।
व्यसनं नाम तद् राजन् न स धर्मः कुधर्मः तत् ॥

१४. कृत्स्नं च धनसंहारं कुर्वन्ति विधिकारणात् ।
अल्पेन तुषितो दुह्यन् भ्रूणहत्यां न बुध्यते ॥

१५. सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः ।
अन्योअन्यबन्धनाव् एतौ विना अन्योअन्यं न सिध्यति ॥

१६. यो ह्यनाढ्यः स पतितः तद् उच्छिष्टम् यद् अल्पकम् ॥
धूमो वायोर् इव वशो बलं धर्मो अनुवर्तते ॥

१७. महच्च फलवैषम्यं दृश्यते कर्मसन्धिषु ।
वहन्ति शिबिकाम् अन्ये यान्त्यन्ये शिबिकां गताः ॥

१८. **समौ चिद् हस्तौ न समं विविष्टः**
**सम्मातरा चिन् न समं दुहाते ।**
**यमयोर् चिन् न समा वीर्याणि**
**ज्ञाती चित् सन्तौ न समं पृणीतः ॥**

**ऋक्. १०-११७-९**

१९. यः कृशार्थः कृशगवः कृशभृत्यः कृशातिथिः ।
स वै राजन् कृशो नाम न शरीरकृशः कृशः ॥

१००. परपाकेषु ये अश्नन्ति आत्मार्थं च पचेत् तु यः ।
पर्यश्नन्ति वृथा यच्च तद् असत्यं प्रकीर्त्यते ॥

१०१. मोघमन्नं विन्दते अप्रचेताः
सत्यं ब्रवीमि वध इत् स तस्य ।
नार्यमाणं पुष्यति नो सखायम्
केवलाघो भवति केवलादी ॥

ऋक्. १०-११७-६

१०२. धारणात् धर्ममित्याहुर् धर्मेण विधृताः प्रजाः ।
यः स्यात् धारणसंयुक्तः स धर्म इति निश्चयः ॥

१०३. नोचेद् धर्तव्यम् अन्यस्य कथं तद् धर्ममारभेत् ।
एतावान् एव वेदेषु निश्चयः कविभिः कृतः ॥

१०४. शक्यम् तु मौनमास्थाय विभ्रतात्मानमात्मना ।
धर्मछद्म समास्थाय च्यवितुं न तु जीवितुम् ॥

१०५. औदकाः सृष्टयश्चैव जन्तवः सिद्धिम् आप्नुयुः ।
तेषाम् आत्मैव भर्तव्यो नान्यः कश्चन विद्यते ॥

१०६. अपि ह्युक्तानि धर्माणि व्यवस्यन्त्य् उत्तरावरे ।
लोकयात्रार्थम् एवेह धर्मस्य नियमः कृतः ॥

१०७. असाधुभ्यो अर्थमादाय साधुभ्यो यः प्रयच्छति ।
आत्मानं संक्रमं कृत्वा कृत्स्नधर्मविद् एव सः ।

१०८. सर्वारम्भान् समुत्सृज्य हतस्वस्तिर् अकिञ्चनः ।
कस्माद् आशंससे भैक्ष्यं कर्तुम् वैक्लवम् उत्तमम् ॥

१०९. वित्तानि धर्मलब्धानि क्रतुमुख्येष्व् अवासृजन् ।
कृतात्मा स महाभाग स वै त्यागी स्मृतो नरः ।

११०. स त्वां द्रव्यमयो यज्ञः संप्राप्तः सर्वदाक्षिणः ।
तत् चेन् न यजसे राजन् प्राप्तं त्वां राज्य-
किल्मिषम् ॥

# अष्टमी

## अध्यात्मनिष्ठा ।

१. परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ।।
१४-१

२. यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ।। ४-३५

३. द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।
१५-१६

४. उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।। १५-१७

५. यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।
१५-१८

६. यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १५-१९

७. ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ १३-५

८. तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥
४-३४

९. पापं कृत्वा अभिमन्यते नाहमस्मीति पूरुषः ।
तं तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषम् ॥

१०. तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ ५-१७

११. यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥
१८-५९

१२. स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥
१८-६०

१३. न स स्वो दक्षो वरुण ध्रुतिः सा
सुरा मन्युर् विभीदको अचित्तिः ।
अस्ति ज्यायान् कनीयस उपारे
स्वप्नश्च न इद् अनृतस्य प्रयोता ॥
ऋक्.–७–८६–६

१४. द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिष्वसजाते ।
तयोर अन्यः पिप्पलं स्वादु अत्ति
अनश्नन् अन्यः अभिचकाशति ॥
ऋक.–१–१६४–२०

१५. समाने वृक्षे पुरुषो निमग्नः
अनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यति अन्यम् ईशः
अस्य महिमानम् इति वीतशोकः ॥

१६. अपाङ् प्राङ् एति स्वधया गृभीतो
अमर्त्यो मर्त्येना सयोनिः ।
ता शश्वन्ता विषूचीना वियन्त
नि अन्यं चिक्युर् न निचिक्युर अन्यम् ॥
ऋक.–१–१६४–३८

१७. अणोर् अणीयान् महतो महीयान्
आत्मा अस्य जन्तोर् निहितो गुहायाम् ।
तम् अक्रतुः पश्यति वीतशोकः
धातुः प्रसादात् महिमानम् आत्मनः ॥

१८. श्रवणायापि बहुभिर् यो न लभ्यः
शृण्वन्तो अपि बहवो यन् न विदुः ।
आश्चर्यः वक्ता कुशलो अस्य लब्धा
" आश्चर्यः श्रोता कुशलानुशिष्टः ॥

१९. तम् दुर्दर्शम् गूढम् अनुप्रविष्टम्
गूहाहितम् गह्वरेष्ठम् पुराणम् ।
अध्यात्मयोगाधिगमेन देवम्
मत्वा धीरो हर्षशोकौ जहाति ॥

२०. पुरुषान् न परं किञ्चित् सा काष्ठा सा परा गतिः ।
एषः सर्वेषु भूतेषु गूढो आत्मा न प्रकाशते ॥

२१. गुणैर् यस् त्ववरैः युक्तः कथं विद्यात् परान् गुणान् ।
अनुमानाद् हि गन्तव्यं गुणैर् अवयवैः परम् ॥

२२. विद्म चैव न वा विद्म शक्यम् वा वेदितुं न वा ।
अनीयान् क्षुरधारायाः गरीयान् अपि पर्वताद् ॥

२३. सूक्ष्मेण मनसा विद्म वाचा वक्तुं न शक्नुमः ।
मनो हि मनसा ग्राह्यम् दर्शनेन च दर्शनम् ॥

२४. सर्वात्मानं महात्मानं विधूममिव पावकम् ।
तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ॥

२५. दीपयन्ति महात्मानः सूक्ष्मम् आत्मानमात्मना ।
वीतरागाः महाप्राज्ञाः ध्यानाध्ययनसम्पदा ॥

२६. विधूम इव सप्तार्चिर् आदित्य इव रश्मिमान् ।
वैद्युताग्निर् इवाकाशे दृश्येतात्मा तथात्मनि ॥

२७. प्रदीप्तेनैव दीपेन मनोदीपेन पश्यति ।
दृष्ट्वात्मानं निरात्मानं स तदा विप्रमुच्यते ॥

२८. ज्ञानदीपेन दीप्तेन पश्यत्य् आत्मानम् आत्मनि ।
दृष्ट्वा त्वम् आत्मनात्मानं निरात्मा भव सर्ववित् ॥

२९. अन्नं प्राणो मनो बुद्धिर् आनन्दश्चेति पञ्च ते ।
कोषास् तैर् आवृतः स्वात्मा विस्मृत्या संसृतिं व्रजेत् ॥

३०. अन्वयव्यतिरेकाभ्याम् पञ्चकोशविवेकतः ।
स्वात्मानं तत उद्धृत्य परं ब्रह्म प्रपद्यते ॥

२१. यद् आत्मतत्त्वेन तु ब्रह्मतत्त्वम्
दीपोपमेनेह युक्तः प्रपश्येत् ।
अजं ध्रुवं सर्वतत्त्वैर् विशुद्धम्
ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥

२२. त्रिर् अस्य ता परमाः सन्ति सत्याः
स्पार्हा देवस्य जनिमानि अग्नेः ।
अनन्ते अन्तः परिवीत आगात्
शुचिः शुक्रः अर्यः रोरुचानः ॥
ऋक्.–४–१–७

२३. त्रितयीमपि तां मुक्त्वा परस्परविरोधिनीम् ।
अखण्डं सच्चिदानन्दं महावाक्येन लक्ष्यते ॥

२४. ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥
१५-१

२५. अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसंततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ १५-२

३६. न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूलम्
असङ्गशस्त्रेण दृढेन छित्त्वा ॥ १५-३

३७. ततः पदं तत्परिमार्गितव्यं
यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ १५-४

३८. निर्मानमोहा जितसङ्गदोषाः
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्-
गच्छन्त्यमूढाः पदमव्ययं तत् ॥ १५-५

३९. न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ १५-६

४०. न तत्र सूर्यो भाति न चन्द्रतारकम्
नेमा विद्युतो भान्ति कुतो अयम् अग्निः ।
तमेव भान्तम् अनुभाति सर्वम्
तस्य भासा विश्वमिदं विभाति ॥

४१. इह चेद् अवेदीद् अथ सत्यम् अस्ति
नाचेद् इहावेदीन् महतीर् विनष्टिः ।
भूतेषु भूतेषु विचिन्त्य धीराः ।
प्रेत्यास्माल् लोकाद् अमृता भवन्ति ॥

४२. ऋतं पिबन्तौ सुकृतस्य लोके
गुहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिनाचिकेताः ॥

४३. महाप्रभावः पुरुषः सर्वस्य हृदि निश्रितः ।
अणिमा लघिमा प्राप्तिर् ईशानो ज्योतिर् अव्ययः

४४. एवं हि यो वेद गुहाशयं प्रभुम्
परं पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिम्
स बुद्धिमान् बुद्धिम् अतीत्य तिष्ठति ॥

४५. ज्योतिर् आत्मनि नान्यत्र सर्व जन्तुषु तत् समम् ।
स्वयञ्च शक्यते द्रष्टुम् सुसमाहितचेतसा ॥

४६. तिलेषु तैलं दधिनीव सर्पिर्
आपः स्रोतःसु अरणिषु चाग्निः ।
एवम् आत्मा आत्मनि गृह्यते असौ
सत्येनैनं तपसा यो अनुपश्यति ॥

४७. हिरण्मये परे कोषे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिस् तद् यद् आत्मविदो
विदुः ॥

४८. भिद्यते हृदयग्रन्थिश् छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

४९. यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ॥

५०. न सन्दृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषि मनसाभिक्लृप्तो
य एतद् विदुर् अमृतास्ते भवन्ति ॥

५१. अन्तःस्थश्च बहिष्ठश्च साधियज्ञाधिदैवतम् ।
ज्ञानान्विता हि पश्यन्ति ते देवास् तात ते द्विजाः ॥

५२. नायमात्मा बलहीनेन लभ्यो
न च प्रमादात् तपसो वाप्यलिङ्गात् ।
एतैर् उपायैः यतते यस्तु विद्वान्
तस्यैष आत्मा विशते ब्रह्मधाम ॥

५३. सत्येन लभ्यस् तपसा ह्येष आत्मा
सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यम ।
अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो
यं पश्यन्ति यतयः क्षीणदोषाः ॥

५४. ज्ञानमुत्पद्यते पुंसाम् क्षयात् पापस्य कर्मणः ।
यथादर्शतले प्रख्ये पश्यत्यात्मानम् आत्मनि ॥

५५. यथाम्भसि प्रसन्ने तु रूपं पश्यति चक्षुपा ।
तद्वत् प्रसन्नेन्द्रियत्वात् ज्ञेयं ज्ञानेन पश्यति ॥

५६. स एव लुलिते तस्मिन् यथा रूपं न पश्यति ।
तथेन्द्रियाकुलीभावे ज्ञेयं ज्ञाने न पश्यति ॥

५७. इन्द्रियाणाम् तु सर्वेषाम् वश्यात्मा चलितस्मृतिः।
आत्मनः सम्प्रदानेन मर्त्यो मृत्युम् उपाश्नुते ॥

५८. उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥६–५

५९. बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६–६

६०. ज्ञानेन निर्मलीकृत्य बुद्धिम् बुद्ध्या मनस् तथा ।
मनसा चेन्द्रियग्रामं अक्षरं प्रतिपद्यते ॥

६१. स सर्वदोषनिर्मुक्तः ततः पश्यति तत् परम् ।
मनो मनसि सन्धाय पश्यन्न् आत्मानम् आत्मनि ॥

६२. परं ब्रह्म परं सत्यं सच्चिदानन्दलक्षणम् ।
अप्रमेयं अनिर्देश्यम् अवाङ्मनसो गोचरम् ॥

६३. वेदाहम् एतत् पुरुषं महान्तम्
आदित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वा अतिमृत्युम् एति
नान्यः पन्थाः विद्यते अयनाय ॥

यजु. ३१-१८

६४. सत्त्वात् परतरं नान्यत् प्रशंसन्तीह तद्विदः ।
अनुमानाद् विजानीमः पुरुषं सत्त्वसंश्रयम् ॥

६५. व्यक्तसत्त्वगुणस्त्वेवं पुरुषो अव्यक्त इष्यते ।
एवं धर्मस्य विज्ञेयं संसाधनम् उपायतः ॥

६६. न शक्यम् अन्यथा गन्तुम् पुरुषं द्विजसत्तम ।
एतेनैवानुमानेन मन्यन्ते वै मनीषिणः ॥

६७. यावद् द्रव्यगुणस् तावत् प्रदीपः संप्रकाशते ।
क्षीणे द्रव्यगुणे ज्योतिर् अन्तर्धानाय गच्छति ॥

६८. न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥
४-३८

६९. श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥
४-३९

७०. अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥
४-४०

७१. जिज्ञासन्तो हि धर्मस्य सन्दिग्धस्य परन्तप ।
पर्यायं नाध्यवसन्ति देवमानुषयोर् जनाः ॥

७२. न दृष्टपूर्वं प्रत्यक्षं परलोकं विदुर् बुधाः ।
आगमांस् त्वनतिक्रम्य श्रद्धातव्यम् बुभूषता ॥

७३. अग्राह्यं चक्षुषा सूक्ष्यम् अनिर्देश्यम च तद् गिरा !
कर्महेतुपुरस्कारं भूतेषु परिवर्तते ।।

७४. अथापि च सहोत्पात्तिः सत्त्वस्य प्रलयस् तथा ।
नष्टे शरीरे नष्टः स्यात् वृथा च स्यात् क्रियापथः।।

७५. यथा प्रदीपमादाय कश्चित् तमसि गच्छति ।
तथा सत्त्वप्रदीपेन गच्छन्तिं परमैषिणः ।।

७६. संशयं स तु कामात्मा चलच्चित्तो अल्पचेतनः ।
अप्राज्ञो न तरत्येनं यो ह्यास्ते न स गच्छति ।।

७७. क्रमशः सञ्चिताशिखः धर्मबुद्धिमयो महान् ।
अन्धकारे प्रवेष्टव्यम् दीपो यत्नेन धार्यताम् ।।

७८. इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ।। ३-४२

७९. एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ।। ३-४३

८०. ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया।। १८-६१

८१. तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥
१८-६२

८२. तमेव धीरो विज्ञाय मात्रां कुर्वीत ब्राह्मणः ।
नानुध्यायाद् बहून् शब्दान् वाचो विग्लापनं हि तत्॥

# नवमी ।

## क्रतुनिष्ठा

१. भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रियमाणाय वक्ष्यामि हितकाम्यया ॥
१०-१

२. अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥
६-१

३. नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥ १८-७

४. ज्ञानमप्य अपदिशं हि यथा नास्ति तथैव तत् ।
दैतेयान् उशना प्राह संशयच्छेदनं पुरा ॥

५. अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥
२-३३

६. जानन्न अपि च यः पापं शक्तिमान् न नियच्छति ।
ईशः सन् सो अपि तेनैव कर्मणा संप्रयुज्यते ॥

७. यद् इमानि हवींषीह विमथिष्यन्त्य् असाधवः ।
भवता विप्रहीनानि प्राप्तं त्वामेव किल्मिषम् ॥

८. इच्छयेह कृतं पापं सद्यस् तं चोपसर्पति ।
कृतं प्रतिकृतं येषां न नश्यति शुभाशुभम् ॥

९. यद् अवध्ये बध्यमाने भवेद् दोषः परन्तप ।
स वध्यस्यावधे दृष्टः इति धर्मविदो विदुः ॥

१०. यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास् तत्र सभासदः ॥

११. प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते ।
तदा सर्वेषु लोकेषु पापकृन् नोपपद्यते ॥

१२. यस्मिन् क्षमा च क्रोधश्च दानादाने भयाभये ।
निग्रहानुग्रहौ चोभौ स वै धर्मविद् उच्यते ॥

१३. वाचा दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम् ।
धनदण्डाः स्मृता वैश्याः निर्दण्डः शूद्र उच्यते ॥

१४. अकार्याणां क्रियाणां च संयोगं यः करोति वै ।
कार्याणां अक्रियाणां च स पार्थ पुरुषाधमः ॥

१५. असूर्या नाम ते लोकाः अन्धेन तमसा वृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः।
यजु—४०-३

१६. प्रजापतिः प्रजाः सृष्ट्वा कर्म तासु विधाय च।
वर्णे वर्णे समाधत्ते ह्येकैकं गुणभाग् गुणम्॥

१७. ब्राह्मणे वेदमभ्यं तु क्षत्रिये तेज उत्तमम्।
दाक्ष्यं वैश्ये च शूद्रे तु सर्ववर्णानुकूलताम्॥

१८. स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु॥
१८-४५

१९. यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥
१८-४६

२०. तपोमूलमिदं सर्वं दैवमानुषकं सुखम्।
तपोमध्यं बुधैः प्रोक्तं तपो अन्तं वेददर्शिभिः॥

२१. ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम्।
वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम्॥

२२. प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥
३-२९

२३. श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम ॥
१८-४७

२४. न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥
३-२६

२५. यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ३-२१

२६. तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥
१६-२४

२७. द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

अर्जुन उवाच ।

२८. ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥
१७-१

२९. शुचेर् अश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ।
देवा वित्तम् अमन्यन्त सदृशं यज्ञकर्मणि ॥

३०. श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ।
मीमांसित्वोभयं देवा सममन्नम् अकल्पयन् ॥

३१. प्रजापतिस् तान् उवाच विषमं कृतम् इत्युत ।
श्रद्धापूतं वदान्यस्य हतम् अश्रद्धयेतरत् ॥

३२. धर्मस्य निष्ठा त्वाचारस् तमेवाश्रित्य भोत्स्यस्ये ।
सदाचारः स्मृतिर् वेदास् त्रिविधं धर्मलक्षणम् ॥

३३. शरीराज् जायते व्याधिर् मानसो नात्र संशयः ।
मानसाज् जायते वापि शारीर इति निश्चयः ॥

३४. तेनाचारेण पूर्वेण संस्था भवति शाश्वती ।
चिराभिपन्नः कविभिर् पूर्वं धर्म उदाहृतः ॥

३५. येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन् न रिष्यते ॥

३६. प्रनष्टः शाश्वतः धर्मः सदाचारेण मोहितः ।
तेन वैश्यस् तपस्वी वा बलवान् वा विमुह्यते ॥

३७. ऋचो अक्षरे परमे व्योमन्
यस्मिन् देवा अधिविश्वे निषेदुः ।
यस् तन्न वेद किम् ऋचा करिष्यति
य इत् तद् विदुस् त इमे समासते ॥
ऋक्–१-१६४-३९

३८. कामाद् अन्येच्छया चान्ये कारणैर् अपरैस्तथा ।
असन्तो अपि वृथाचारं भजन्ते बहवो जनाः ॥

३९. अग्निहोत्रं त्रयीधर्मस् त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥

४०. धर्मस्य ह्रियमानस्य बलवद्भिर् दुरात्मभिः ।
या या विक्रियते संस्था ततः सो अपि प्रणश्यति ॥

४१. अज्ञातं कर्म कृत्वा च क्लेशो नान्यत् प्रहीयते ।
प्रत्यक्षतः साधयामः न परोक्षम् उपास्महे ॥

४२. प्रत्यक्षावेव धर्मार्थौ क्षत्रियस्य विजानतः ।
तत्र न व्यवधातव्या परोक्षा धर्मयातना ॥

४३. प्रत्यक्षं सुखभूयिष्ठम् आत्मसाक्षिकम् अच्छलम् ।
सर्वलोकहितं धर्मं क्षत्रियेषु प्रतिष्ठितम् ॥

४४. सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥ १८-४८

४५. नैवातिपापं भक्षमानस्य दृष्टम्
सुरां तु पीत्वा पतती इति शब्दः ।
अन्योन्यकार्याणि यथा तथैव
न पापमात्रेण कृतं हिनस्ति ॥

४६. सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्॥ १८-५६

४७. अनुच्छेदाय लोकानां अनुच्छेदाय कर्मणाम् ।
पूर्वैर् आचरितो धर्मश् चतुराश्रमसङ्कटः ॥

४८. ब्रह्मचारी गृहस्थश्च वानप्रस्थो अथ भिक्षुकः ।
यथोक्तचारिणः सर्वे गच्छन्ति परमां गतिम् ॥

४९. आहुताध्यायो गुरुकर्मस्व् अचोद्यः
पूर्वोत्थायी चरमं चोपशायी ।
मृदुर् दान्तो धृतिमान् अप्रमत्तः
स्वाध्यायशीलः सिध्यति ब्रह्मचारी ॥

५०. धर्मागतं प्राप्य धनं यजेत
दद्यात् सदैवा अतिथीन् भोजयेच्च ।
अनाददानश्च परैर् अदत्तम्
सैषा गृहस्थोपनिषत् पुराणी ॥

५१. स्ववीर्यजीवि वृजिनात् निवृत्तो
दाता परेभ्यः न परोपतापी ।
तादृङ् मुनिः सिद्धिम् उपैति मुख्याम
वसन्न् अरण्ये नियताहारचेष्टः ॥

५२. अशिल्यजीवी गुणवांश्चव नित्यम्
जितेन्द्रियः सर्वदा विप्रयुक्तः ।
अनोकशायी लघुर् अल्पप्रचारः
चरन देशान् एकचरः स भिक्षुः ॥

५३. एकः पन्थाः ब्राह्मणानां येन गच्छन्ति तद्विदः ।
गृहेषु वनवासेषु गुरुवासेषु भिक्षासु ॥

५४. देवयाना हि पन्थानश् चत्वारः शाश्वताः मताः ।
पृथगाश्रमिणां कर्मण्येकार्थानीति नः श्रुतम् ॥

५५. अन्नाद् गृहस्था लोके अस्मिन् भिक्षवस् तत एव च
अन्नात् प्राणः प्रभवति अन्नदो प्राणदो भवेत् ॥

५६. यथा मातरम् आश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गार्हस्थ्यम् आश्रित्य वर्तन्ते इतराश्रमाः ॥

५७. ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥

१८-४१

५८. शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥

१८-४२

५९. शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥

१८-४३

६०. कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम ॥

१८-४४

६१. अदान्तो ब्राह्मणो असाधुः निस्तेजाः क्षत्रियो अधमः ।
अदक्षो निन्दयते वैश्यः शूद्रश्च प्रतिकूलवान् ॥

६२. न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥

६३. कामः क्रोधः भयं लोभः शोकश्च चिन्ता क्षुधा श्रमः ।
सर्वेषां न प्रभवति कस्माद् वर्णो विभिद्यते ॥

६४. एवं बुद्ध्वा नरः सर्वं भूतानाम् अगतिं गतिम् ।
समवेक्ष्य च वैषम्यं लभते शमम् उत्तमम् ॥

६५. यः स्थितः पुरुषः धर्मे धात्रा सृष्टे यथार्थवत् ।
आश्रमाणां हि सर्वेषां फलं प्राप्नोत्यनामयम् ॥

६६. जात्या न क्षत्रियः प्रोक्तः क्षत्त्राणं करोति यः ।
चातुर्वर्ण्य-बहिष्टो अपि स एव क्षत्रियः स्मृतः ॥

६७. पन्थानौ पितृयानश्च देवयानश्च विश्रुतौ ।
प्रवृत्तिलक्षणं धर्मं पश्यामि परमं नृप ॥

६८. इज्याध्ययनदानानि तपः सत्यं क्षमा दमः ।
अहिंसा इति मार्गो अयं धर्मश्चाष्टविधः स्मृतः ॥

६९. अत्र पूर्वश्चतुर्वर्गः पितृयानपथं स्थितः ।
उत्तरो देवयानस्तु सद्भिर् आचरितः सदा ॥

७०. कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसङ्ग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ॥ ३-२०

७१. सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥६-३१

७२. समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनाऽत्मानं ततो याति परां गतिम् ॥
१३-२९

७३. सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥
३-२५

७४. समानो मन्त्रः समितिः समानी
समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रं अभिमन्त्रये वः
समानेन वो हविषा जुहोमि ॥

ऋक.–१०–१९१–३

७५. अध्ययनं ब्रह्मयज्ञः देवयज्ञस्तु चक्रकम् ।
बलिर् पितृभ्यः होमो भौतः नृयज्ञः तीर्थप्राटनम् ॥

७६. आह्निकं पाक्षिकं चैव मासिकम् आयनं तथा ।
यथाक्रमं वार्षिकं च यथाशक्ति यथाश्रुतम् ॥

७७. पञ्चैतान् यो महायज्ञान् न दापयति शक्तितः ।
स गृहे स्वे वसन् नित्यं सूनादोषैर् न लिप्यते ॥

७८. पञ्चयज्ञांस्तु यो मोहान् न करोति गृहाश्रमे ।
तस्य चायं न च परो लोको भवति धर्मतः ॥

७९. यस्याग्निहोत्रम् अदर्शपौर्णमासम्
अचातुर्मास्यम् अनाग्रयणम् अतिथिवर्जितम् ।
अहुतं अवैश्वदेवम् अविधिना हुतम्
आसप्तमांस् तस्य लोकान् हिनस्ति ॥

८०. चतुराश्रमधर्माश्च वर्णधर्माश्च पाण्डव ।
लोकवेदोत्तरश्चैव क्षात्रधर्मे समाहिताः ॥

८१. सर्वाण्येतानि कर्माणि क्षत्रे भरतसत्तम ।
निराशिषो जीवलोकाः क्षात्रधर्मे अव्यवस्थिते ॥

८२. देशधर्मांश्च कौन्तेय कुलधर्मान् तथैव च ।
पालयन् पुरुषव्याघ्रः राजा सर्वाश्रमी भवेत् ॥

८३. अल्पाश्रयान् अल्पफलान् वदन्ति
धर्मान् अन्यान् धर्मविदो मनुष्याः ।
महाश्रयं बहुकल्याणरूपम्
क्षात्रं धर्मं नेतरं प्राहुर् आर्याः ॥

८४. सर्वे धर्माः राजधर्मप्रधानाः
सर्वे वर्णाः पाल्यमाना भवन्ति ।
सर्वस् त्यागो राजधर्मेषु राजन्
त्यागं धर्मं चाहुर् अग्र्यं पुराणम् ॥

८५. नोद्विग्नश् चरते धर्मं नोद्विग्नश् चरते क्रियाम् ।
दशश्रोत्रिसमः राजा इत्येवं मनुर् अब्रवीत् ॥

८६. अत्र गाथा पुरा गीता भार्गवेन महात्मना ।
आख्याने राजचरिते नृपतिं प्रति भारत ॥

८७. राजानं प्रथमं विन्देत् ततो भार्यां ततो धनम् ।
राजन्यसति लोके अस्मिन् कुतो भार्या कुतो धनम् ॥

८८. निर्वनो वध्यते व्याघ्रः निर्व्याघ्रश् छिद्यते वनम् ।
तस्माद् व्याघ्रो वनं रक्षेद् वनं व्याघ्रं च पालयेत् ॥

८९. अनाढ्याश्चापि जीवन्ति राज्यं चाप्यनुशासति ।
बुद्धिपौरुषसंपन्नास् त्वया तुल्याधिकजनाः ॥

९०. न च त्वमिव शोचन्ति तस्मात् त्वमपि मा शुचः ।
किं नु त्वं तैः नरैः श्रेयांस् तुल्यो वा बुद्धिपौरुषैः॥

९१. न हि कृत्स्नतमो धर्मः शक्यः प्राप्तुमिति श्रुतिः ।
नात्यन्तं गुणवत् किञ्चिन् न चाप्यत्यन्तनिर्गुणम् ॥

९२. अल्पं हि सारभूयिष्ठं यत् कर्मोदारमेव तत् ।
कृतमेवाकृताच् श्रेयः न पापीयो अस्त्य् अकर्मणः ॥

९३. कृषिं साध्विति मन्यन्ते तत्र हिंसा अपरा स्मृता ।
कर्षन्तो लाङ्गलैः पुंसो घ्नन्ति भूमिशयान् बहून् ॥

९४. अन्यत्र राजन् हिंसायाः वृत्तिर् नेहास्ति कस्यचित्।
अप्यरण्यसमुत्थस्य एकस्य चरतो मुनेः ॥

९५. जीवाः हि बहवः पार्थ वृक्षेषु च फलेषु च ।
उदके बहवश्चापि नास्ति कश्चिद् अहिंसकः ॥

९६. उपविष्टाः शयानाश्च घ्नन्ति जीवान् अनेकशः ।
कुर्वन्त्येव हिंसां तु यत्नाद् अल्पतरा भवेत् ॥

९७. न हि पश्यामि जीवन्तम् लोके कश्चिद् अहिंसया ।
सत्त्वैः सत्त्वा हि जीवन्ति दुर्बलैः बलवत्तराः ॥

९८. नकुलो मूषिकान् अत्ति विडालो नकुलांस् तथा।
विडालं अत्ति श्वा राजन् श्वानं व्यालमृगस् तथा ॥

९९. तान् अत्ति पुरुषः सर्वान् पश्य कालो यथागतः ।
प्राणस्यान्नम् इदं सर्वं जङ्गमं स्थावरं च यत् ॥

१००. हेतुमात्रमिदं तस्य विहितं भरतर्षभ ।
यद् हन्ति भूतैर् भूतानि तद् अस्मै रूपम् ऐश्वरम् ॥

१०१. विधानं दैवविहितं तत्र विद्वान् न मुह्यति ।
यथासृष्टो असि कौन्तेय तथा भवितुम् अर्हसि ॥

१०२. उदके बहवः प्राणाः पृथिव्यां च फलेषु च ।
न कश्चिन् न च तान् हन्ति किम् अन्यत् प्राण-
धारणात् ॥

१०३. सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् ।
पक्ष्मणो अपि निपातेन येषां स्यात् स्कन्धपर्ययः॥

१०४. नाच्छित्वा परमर्माणि नाकृत्वा कर्मदुष्करम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥

१०५. यथा सृष्टो असि कौंतेय धात्रा कर्मसु तत् कुरु ।
अतएव हि सिद्धिस् ते नेशस् त्वं कर्मणां नृप ॥

१०६. भूमिं भित्त्वौषधिं छित्त्वा वृक्षादीन् अणुजान् पशून् ।
मनुष्यास् तन्वते यज्ञं ते स्वर्गं प्राप्नुवन्ति च ॥

१०७. अनुयज्ञं जगत् सर्वं यज्ञश्चानुजगत् सदा ।
नायं लोको अस्त्ययज्ञानां परश्चेति विनिश्चयः ॥

१०८. स्तेनो वा यदि वा पापः यदि वा पापकृत्तमः ।
यष्टुम् इच्छन्ति यज्ञं यः साधुमेव वदन्ति तम् ॥

१०९. ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ५-१०

११०. तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४-४२

---

# दशमी

## भक्तियोगः ।

१. सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥
१८-६४

२. मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ९-३४

३. सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥
१८-६६

४. भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरं ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥
५-२९

५. नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥
७-२५

६. यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याऽहं न प्रणश्यामि स च मे न प्रणश्यति ॥
६-३०

७. न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना दानवं भावमाश्रिताः॥ ७-१५

८. त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥
७-१३

९. दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ ७-१४

१०. मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥
७-३

११. यं स्मा पृच्छन्ति कुह सेति घोरम्
उतेम् आहुर् नैषो अस्ती इत्येनम् ।
सो अर्यः पुष्टीर् विज इवामिनाति
श्रद् अस्मै धत्त स जनास इन्द्रः ॥
ऋक्.—२-१२-५

१२. यो जात एव प्रथमो मनस्वान्
देवो देवान् क्रतुना पर्यभूषत् ।
यस्य शुष्माद् रोदसी अभ्यसेताम्
नृम्णस्य मह्ना स जनास इन्द्रः ॥

ऋक्.–२-१२-१

१३. न तं विदाथय इमा जजान
अन्यद् युष्माकम् अन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या च
असुतृप उक्थशासश्चरन्ति ॥

ऋक्.–१०–८२–७

१४. यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ १०-३

१५. अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥ १०-८

१६. मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥

१०-९

१७. तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
१०-१०

१८. तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥
१०-११

१९. मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥
८-१५

२०. भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥
१८-५५

२१. ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥
१४-२७

२२. अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ ८-२१

२३. आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ ८-१६

२४. अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥
९-२२

२५. जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥
७-२९

अर्जुन उवाच ।

२६. आलम्बस्याप्य् अनित्यत्वं निरालम्बस्य शून्यता ।
उभयोरपि दोषित्वात् कथं ध्यायन्ति योगिनः ॥

वासुदेव उवाच ।

२७. अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥
८-१४

२८. दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः ॥

२९. अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ ७-२४

३०. किमित् ते विष्णो परिचक्ष्यं भूत्
प्र यद् ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मद् अपगूह एतद्
यद् अन्यरूपः समिथे बभूथ ॥
ऋक्.–७–१००–६

३१. यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ ७-२१

३२. पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ९-२६

३३. वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ ४-१०

३४. ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ४-११

३५. काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥
४-१२

३६. येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ ९-२३

३७. अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥

९-२४

३८. एको हि रुद्रो न द्वितीयाय तस्थुर्
य इमान् लोकान् ईशते इशानिभिः ।
प्रत्यङ् जनांस् तिष्ठति संचुकोचान्तकाले
संसृज्य विश्वा भुवनानि गोपाः ॥

३९. हिरण्यगर्भः समवर्तताग्रे
भूतस्य जातः पतिर् एक आसीत् ।
स दाधार पृथिवीम् द्याम् उतेमाम्
कस्मै देवाय हविषा विधेम ॥

ऋक्.–१०–१२१–१

४०. स जायत प्रथमः पस्त्यासु
महो बुध्ने रजसो अस्य योनौ ।
अपाद् अशीर्षा गुहमान अन्त
आयोयुवानो वृषभस्य नीडे ॥

ऋक्.–४–१–११

४१. स पर्यगाच् शुक्रम् अकायम् अव्रणम्
अस्नाविरं शुद्धं अपापविद्धम् ।
कविर् मनीषि परिभूः स्वयम्भूः
याथातथ्यतो अर्थान् व्यदधाच् समाभ्यः ॥
यजु.–४०–८

४२. अस्तभ्नाद् द्याम् असुरो विश्ववेदाः
अमिमीत वरिमानं पृथिव्याः ।
आसीदद् विश्वा भुवनानि सम्राट्
विश्वेत् तानि वरुणस्य व्रतानि ॥
ऋक्.–८–४२–१

४३. विश्वतश्चक्षुर् उत विश्वतोमुखः
विश्वतोबाहुर् उत विश्वतस्पात् ।
सं बाहुभ्याम् धमति सं पतत्रैर्
द्यावाभूमी जनयन् देव एकः ॥
ऋक्.–१०–८१–३

४४. रूपं रूपं प्रतिरूपो बभूव
तद् अस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते
युक्ता हि अस्य हरयः शता दश ॥
ऋक्.–६–४७–१८

४५. समेत विश्वे वचसा पतिं दिवः
एको विभुर् अतिथिर् जनानाम् ।
स पूर्व्यो नूतनम् आ विवासत्
तम् वर्तनिर् अनुवावृत एकमित् पुरू ॥

साम. पू.–४–२–४–३

४६. इन्द्रं मित्रं वरुणम् अग्निम् आहुर्
अथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद् विप्रा बहुधा वदन्ति
अग्निं यमं मातरिश्वानम् आहुः ॥

ऋक् –१०–१६४–४६

४७. वि मे पुरुत्रा पतयन्ति कामाः
शम्यच्छा दीद्ये पूर्व्याणि ।
समिद्धे अग्नाव् ऋतमिद् वदेम
महद् देवानाम् असुरत्वम् एकम् ॥

ऋक्.–३–५५–३

४८. यान्ति देवव्रता देवान् पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम्॥

९-२५

४९. इन्द्रावरुणा युवम् अध्वराय नो
विशे जनाय महि शर्म यच्छतम् ।
दीर्घप्रयुज्यम् अति यो वनुष्यति
वयं जयेम पृतनासु दूढ्यः ॥
ऋक्.–७–८२–१

५०. सम्राड् अन्यः स्वराड् अन्य उच्यते वाम्
महान्ताव् इन्द्रावरुणा महावसू ।
विश्वे देवास परमे व्योमनि
सं वाम् ओजो वृषणा सं बलं दधुः ॥
ऋक्.–७–८२–२

५१. वृत्राणि अन्यः समिथेषु जिघ्नते
व्रतानि अन्यो अभिरक्षते सदा ।
हवामहे वां वृषणा सुवृक्तिभिर्
अस्मे इन्द्रावरुणा शर्म्म यच्छतम् ॥
ऋक्.–७–८३–९

५२. शयुः परस्ताद् अध नु द्विमाता
अबन्धनश् चरति वत्स एकः ।
मित्रस्य ता वरुणस्य व्रतानि
महद् देवानाम् असुरत्वम् एकम् ॥
ऋक्.–३–५५–६

५३. आ पश्चाद् आ नासत्या पुरस्ताद्
आ अश्विना यातम् अधराद् उदक्तात्।
आ विश्वतः पाञ्चजन्येन राया
यूयं पाथ स्वस्तिभिः सदा नः ॥
ऋक्.–७–७२–५

५४. देवस् त्वष्टा सविता विश्वरूपः
पुपोष प्रजाः पुरुधा जजान।
इमा च विश्वा भुवनानि अस्य
महद् देवानाम् असुरत्वम् एकम् ॥
ऋक्.–३–५५–१९

५५. तम् उ ष्टुहि यः सु–इषुः सुधन्वा
यो विश्वस्य क्षयति भेषजस्य।
यक्ष्वा महे सौमनसाय रुद्रम्
नमोभिर देवम् असुरं दुवस्य ॥
ऋक्.–५-४२-११,

५६. अर्हन् बिभर्षि सायकानि धन्वा
अर्हन् निष्कम् यजतं विश्वरूपम्।
अर्हन् इदं दयसे विश्वम् अभ्वम्
न वा ओजीयो रुद्र त्वद् अस्ति ॥
ऋक्.–२-३३-१०

५७. कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥
७-२०

५८. स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हितान्॥७-२२

५९. अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यांति मद्भक्ता यान्ति मामपि ॥
७-२३

६०. यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः॥ १७-४

६१. त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥ ९-२०

६२. ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशंति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभंते ॥ ९-२१

६३. येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥७-२८

६४. चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ ७-१६

६५. तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥
७-१७

६६. उदाराः सर्व एवैते ज्ञानित्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥
७-१८

अर्जुन उवाच ।

६७. एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥ १२-१

श्रीभगवानुवाच ।

६८. मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ १२-२

६९. ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ १२-३

७०. संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ १२-४

७१. क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ १२-५

७२. ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ १२-६

७३. तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ १२-७

७४. ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ ९-१५

७५. ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ ४-२४

७६. ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ १३-२५

७७. अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ १३-२६

७८. मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ १२-८

७९. अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ १२-९

८०. अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥
१२-१०

८१. अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥
१२-११

८२. श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥
१२-१२

८३. चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥
१८-५७

८४. मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥
१८-५८

८५. यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥ ९-२७

८६. शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि॥९-२८

८७. पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥
८-२२

८८. बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥ ७-१९

८९. यस्ता दैवेङ्‌ अपरो मष्यांस् चा
तरेमांस्ता योइ इम् तरे—मन्यन्ता ।
अन्येङ्‌ अह्मात् ये होइ अरेम्—मन्याता
सओष्यन्तो देंग्-पतोइस् स्पेन्ता-दएना ।
उर्वथो वराता पाता वा मज्दा अहुरा ॥
गाथा—८-११

९०. दिवो विष्ण उत वा पृथिव्या
महो विष्ण उरोर् अन्तरिक्षाद् ।
हस्तौ पृणस्व बहुभिर् वसव्यै
आ प्रयच्छ दक्षिणाद् ओत सव्यात् ॥
पृश्नि—७-१२

९१. यो नः पिता जनिता यो विधाता
धामानि वेद भुवनानि विश्वा ।
यो देवानां नामध एक एव
तं संप्रश्नं भुवना यन्ति सर्वा ॥
ऋक्.–१०-८२-३

९२. को नानाम वचसा सौम्याय
मनायुर् वा भवति वस्त उस्राः ।
क इन्द्रस्य युज्यम् कः सखित्वम्
को भ्रात्रं वष्टि कवये क उती: ॥
ऋक्.–४-२५-२

९३. य आपिर् नित्यो वरुण प्रियः सन्
त्वाम् आगांसि कृनवत् सखा ते ।
मा त एनस्वन्तो यक्षिन् भुजेम
यन्धि स्मा विप्रः स्तुवते वरुथम् ॥
ऋक्.–७-८८-६

९४. अपश्यम् गोपाम् अनिपद्यमानम्
आ च परा च पथिभिश् चरन्तम् ।
स सध्रीचीर् स विषूचीर् वसानः
आ वरीवर्ति भुवनेषु अन्तः ॥
ऋक्.–१०–१७७–३

९५. सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ ९-१४

९६. पश्चात् पुरस्ताद् अधराद् उदक्तात्
कविः काव्येन परिपाहि राजन् ।
सखे सखायम् अजरो जरिम्णे
अग्ने मर्त्यान् अमर्त्यस् त्वं नः ॥
ऋक्.–१०–८७–२१

९७. समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥
९-२९

९८. अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ९-३०

९९. क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥
९-३१

१००. मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां
गतिम् ॥ ९–३२

१०१. किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥
९-३३

१०२. मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥
१८-६५

१०३. मयि सर्वाणि कर्माणि संन्यस्याऽध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३-३०

# एकादशी

## प्रतीक-सन्ध्या ।

श्रीभगवानुवाच ।

१. इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ ४-१

२. एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥ ४-२

३. स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ४-३

अर्जुन उवाच ।

४. अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४-४

श्रीभगवानुवाच ।

५. बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ४-५

६. अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ४-६

७. यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ४-७

८. परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ४-८

९. जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ४-९

१०. न मे विदुः सुरगणः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ १०-२

११. वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥
७-२६

१२. मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ९-४

१३. न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ९-५

१४. यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ९-६

१५. मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७-७

१६. यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥
१५-१२

१७. गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥
१५-१३

१८. अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १५-१४

१९. सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५-१५

२०. अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ ९-१६

२१. पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥ ९-१७

२२. गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ ९-१८

२३. तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ ९-१९

२४. रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ७-८

२५. पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ७-९

२६. बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ ७-१०

२७. बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ७-११

२८. ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥
७-१२

२९. बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ १०-४

३०. अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ १०-५
३१. महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥
१०-६
३२. एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ १०-७
अर्जुन उवाच ।
३३. परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १०-१२
३४. आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥
१०-१३
३५. सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥
१०-१४
३६. स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १०-१५

३७. वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥
१०-१६

३८. कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥
१०-१७

३९. विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥
१०-१८

श्रीभगवानुवाच ।

४०. हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥
१०-१९

४१. अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥
१०-२०

४२. आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥
१०-२१

४३. वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥
१०-२२

४४. रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥
१०-२३

४५. पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥
१०-२४

४६. महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥
१०-२५

४७. अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥
१०-२६

४८. उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥
१०-२७

४९. आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥
१०-२८

५०. अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम्॥ १०-२९

५१. प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥
१०-३०

५२. पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामास्मि जाह्नवी ॥
१०-३१

५३. सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥
१०-३२

५४. अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः॥ १०-३३

५५. मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥
१०-३४

५६. बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥
१०-३५

५७. द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥
१०-३६

५८. दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥
१०-३८

५९. वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥
१०-३७

६०. अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ९-११

६१. मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः॥ ९-१२

६२. महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्॥ ९-१३